॥ श्री ॥

## ऋग्वेदीय (आश्वलायन)

# उत्सर्जनोपाकर्म



प्रकाशक :

**मे॥ श्रीनिवासाचार्य होंबाळि & सन्**

बुक् - सेलर्स

स्टेशन् रोड, गदग - ५८२ १०१

जि : गदग    राज्य : कर्नाटक

# ।। अथ उत्सर्जनोपाकर्म प्रयोगः ।।

## ।। पञ्चगव्यमेलनम् ।।

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य श्रुतिस्मृति पुराणोक्त फलप्राप्त्यर्थं उत्सर्जनांगत्वेन पञ्चगव्य मेलनं करिष्ये ।। गायत्र्या गोमूत्रम् ।। ॐ भूर्भुवःस्वः ।। तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियो यो नः प्रचोदयात् ।।

गन्धद्वारामिति गोमयम्–

ॐ गन्धद्वारांदुराधर्षां नित्यपुष्टां करीषिणीं ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं ।।

आप्यायस्वेति पयः–

ॐ आप्यायस्वसमेतुते विश्वतः सोमवृष्ण्यं । भवावाजस्य संगथे।।

दधिक्राव्ण इति दधि ।।

ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ।
सुरभिनोमुखाकरत्प्रणआयुंपितारिषत् ।।

शुक्रमसीति घृतम् ।।

ॐ शुक्रमसि ज्योतिरसितेजोसि ।। देवस्येति कुशोदकं-

ॐ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।।

इति कुशोदकं ।। ॐ इति प्रणवेनालोडनं दिक्षुविक्षेपश्च । आपोहिष्ठेतितृचेनाभिमन्त्रीयात् ।। इति पंन्चगव्यविधिः ।।

अथाचार्यः ब्राह्मणैः सह आचम्य पवित्रपाणिः प्राणानायम्य, श्रीहरिवायुस्मरणपूर्वकं तदेवलग्नमित्यादि० । देश कालौ सङ्कीर्त्य । भारतीरमणमुख्यप्राणांतर्गत श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं अध्याध्यानां चाधीतानां छंद आदीनां यातयामता निरासेनाप्यायनद्वारा एभिः ब्राह्मणैः सह अद्य औपाकरणेन्हि अंतरितमुत्सर्जनाख्यं कर्य करिष्ये ॥

तत्रादौ शरीरवाङ्मनःशुध्यर्थं । पंचगव्यप्राशनं निर्विघ्नतासिद्धयर्थं गणपत्यंतर्गत भा०मु० विश्वंभरपूजांकरिष्ये ।

प्रथमं सर्वे पंचगव्यं प्राश्नीयुः ॥ तत्र मन्त्रः ॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके । प्राशनं पंचगव्यस्य– दहत्वग्निरिवेंधनम् ॥ इति प्राश्य आचामेत् एवं त्रिः ॥

गणानांत्वा शौनको गृत्समदो गणपतिर्जगती । गणपत्यावा०

ॐ गणानां त्वा गणपतिं हवामहे कविंकवीनामुपवश्रवस्तमम् । ज्येष्ठराजंब्रह्मणांब्रह्मणस्पत आनः शृण्वन्नूतिभिःसीदसादनम् ॥

ॐ भूः गणपतिं आवाहयामि ॥ ॐ भुवः गणपतिं आवा० ॐ स्वः गणपतिं आवा० ॥ ॐ भूर्भुवःस्वः अस्मिन्पूगीफले ऋद्धिबुद्धिसहितं सांगं सपरिवारं सायुधं सशक्तिकं महागणपतिं आवाहयामि । इति आसनादि महानीराजनांते

ॐ स इज्जनेन सविशा सजन्मना सपुत्रैर्वाजंभरते धनानृभिः । देवानां यः पितरमाविवासति श्रद्धामनाहविषा ब्रह्मणस्पतिं ॥

मंत्रपुष्पांजलिं समर्पयामि ॥

वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ इति प्रार्थयेत् ॥
यस्यस्मृत्या • अनया पूजया गणपत्यन्तर्गत भारतीरमण मुख्यप्राणांतर्गत विश्वंभरः प्रीयताम् ॥

अद्येत्यादि उत्सर्जनहोमं कर्तुं स्थण्डिलादि सकलकर्म करिष्ये ॥ तद्गोमयेन प्रदक्षिणमुपलिप्य, दक्षिणेऽष्टौ, उदीच्यां द्वे, प्रतीच्यांचतुः प्राच्यामर्धमित्यंगुलानित्यक्त्वा, दक्षिणोपक्रमामुदकसंस्थां प्रादेशमात्रामेकां लेखां,तस्या दक्षिणोत्तरयोः प्रागायते प्रादेशसंमिते द्वे लेखे लिखित्वा, तयोर्मध्ये परस्परमसंसृष्टाः प्रागायताः प्रादेशसंमितास्तिस्र इतिषड्लेखा यज्ञियशकलमूलेन दक्षिणहस्तेनोल्लिख्य, लेखामुतच्छकलमुदगग्रं निधाय स्थण्डिलमद्भिरभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणिप्रक्षाल्य वाग्यतो भवेत् ॥

ततः स्थण्डिले स्वाहायै नमः स्वाहां ध्यायामि ।
ॐ श्रीऋतुस्नातां हरिणीरुपिणीं लक्ष्मीमनुसंधाय ।
स्वभर्तुः संस्थितामङ्के देवानां हव्यवाहिनोम् । रक्तवर्णा-रक्तवस्त्रां ध्यायेज्वलनसुंदरीम् ॥ इति स्वाहां ध्यात्वा ॥

तत्रैव तदन्तस्थ भारत्यै नमः भारतीं ध्यायामि ।
उद्यद्दिवाकरसमूहनिभां स्वभर्तुरङ्कस्थितामभयसद्वरबाहुयुग्मां। मुद्रांच तत्त्वदृशये वरपुस्तकंचदोर्युग्मकेनदधतीं स्मरतात्मविद्याम् ॥ इति भारतीं ध्यात्वा ॥

लक्ष्मीं ध्यायेत् ।। कौशेयरक्तवसनामरविंदनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्तां । उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां ध्यायेद्विधीशनुतपादयुगां जनित्रीं ॥ १ ॥

ततस्तैजसेनासंभवे मृण्मयेन वा पात्रयुग्मेन सम्पुटीकृत्य सुवासिन्या श्रोत्रियागारात् स्वगृहाद्वा समृद्धं निर्धूममग्निमाहृत्य स्थंडिलादाग्नेय्यां निधाय ।।

जुष्टोमूदना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् ।। एह्यग्नेराहूगणो गोतमोऽग्निस्त्रिष्टुप् ।। अग्न्यावाहनेविनि०

ॐ जुष्टोदमूना अतिथिर्दुरोण इमंनोयज्ञमुपयाहिविद्वान् ।
विश्वा अग्ने अभियुजोविहत्या शत्रूयतामाभराभोजनानि ।।
एह्यग्न इहहो तानिषीदादब्धः सुपुर एताभवानः ।
अवतांत्वारोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ।।

इत्यक्षतैरावाह्य ।। आच्छादनं दूरीकृत्य समस्तव्याहृतीनां परमेष्ठीप्रजापतिःप्रजापतिर्बृहती अग्निप्रतिष्ठापने वि० ।। ॐभूर्भुवःस्वः विष्णुवीर्यात्मकं बलवर्धननामानमग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य । पात्रे अक्षतोदकं प्रास्य पात्रद्वयमेकीकृत्य।प्रोक्षितैंधनानिनिक्षिप्य वेणुधमन्या प्रबोध्यध्यायेदेवं चत्वारिश्रृंगागोतमोवामदेवोऽग्निस्त्रिष्टुप् अग्निमूर्तिध्याने०

ॐ चत्वारिश्रृंगात्रयो अस्यपादा द्वेशीर्षे सप्तहस्तासो अस्य ।
त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ।।

स्मृतिमन्त्राश्च–

सप्तहस्तश्चतुःश्रृङ्गः सप्तजिह्वोद्विशीर्षकः ।
त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ।।
स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥
तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ।
मेषारूढो जटाबद्धो गौरवर्णो महौजसः ।।
धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः ।
आत्माभिमुखमासीन एवंरूपो हुताशनः ॥

अग्नेः गर्भाधानादि षोडशसंस्कारसिध्यर्थं व्यस्तसमस्तव्याहृत्याषोडशवारं आज्येन होष्ये॥ तूष्णीं आज्यमुत्पूयः स्रुवं संमृज्य ।। भूरादिदेवताध्यानं कुर्यात् ।। वासुदेवादिकाः शुक्लरक्तपीतसितोज्वलाः । चक्रशंखगदाब्जेतः प्रथमो मुसली हली ।। सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् । सशंखचक्रस्तुर्यस्तु शंखचक्रासिचर्मवान् ।। इतिध्यात्वा ।। संस्कारहोमंकुर्यात् । ॐ भूःस्वाहा अग्नयेश्रीअनिरुद्धायेदं नमम । ॐ भुवःस्वाहा वायवेश्रीप्रद्युम्नायेदं नमम ।। ॐ स्वःस्वाहा सूर्यायश्रीसंकर्षणायेदं नमम । ॐभूर्भुवः स्वः स्वाहा प्रजापतये श्रीवासुदेवायेदं० इत्येकवारं ।। एवमेव पंचदशवारं ।। सांगतासिध्यर्थं पूर्णाहुतिआज्येन होष्ये ।। ॐभूर्भुवः स्वः स्वाहा । प्रजापतये श्रीवासुदेवायेदं नमम ।। इति संस्कारहोमः ।।

अग्नेः वैष्णवत्वसिद्ध्यर्थं विष्ण्वाहुतीः आज्येन होष्ये॥ ॐनमोनारायणायस्वाहा नारायणायेदं॰ इत्यष्टवारं। पुरुष सूक्तेन षोडशवारं॥ ॐनमो भगवते वासुदेवायेतिद्वादशवारं ॐ विं विष्णवेनमःस्वाहेति षड्वारं। इति वैष्णवत्वसिद्धिः॥

तदन्तस्थमुख्यप्राणध्यानम् – उद्यद्रविप्रकरसन्निभम च्युताङ्के स्वामीनमस्यनुतिनित्यवचः प्रवृत्तिम् । ध्यायेद्ग-दाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्ति ।

तदन्तस्थलक्ष्मीं ध्यायेत्– कौशेयपीतवसनामरविंद नेत्रां पाशांकुशाभयवरोद्यतपद्महस्ताम् । उद्यच्छतार्कसदृशीं परमाङ्कसंस्थांध्यायेद्विधीशनुतपादयुगां जनित्रीम् ॥

परशुरामं ध्यायेत् – अंगारवर्णमभितोंडबहिः प्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरम् । ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयन्तम् ॥

ॐ एषहिदेवःप्रदिशोनुसर्वाः पूर्वोहिजातःसउगर्भेअंतः । सविजायमानः सजनिष्यमाणः प्रत्यङ्मुखांस्तिष्ठतिविश्वतोमुखः॥

अग्ने वैश्वानर शाण्डिल्यगोत्र मेषारूढ मेषध्वज अग्न्यंतर्गत भा॰ मु॰ हरिणीपतिश्रीपरशुराम मम सम्मुखो वरदोभव॥

समिद्वयमादाय उत्सर्जनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये। अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिप्रजापतिचाघारदेवते आज्येन, अग्नीषोमौचक्षुषीआज्येन अत्र प्रधानं– सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां

सदसस्पतिं अनुमतिं छंदांस्यृषीन् ।। एताः प्रधान देवताः आज्यद्रव्येण पुनरत्र प्रधानं– अप्तृणसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निं अपः अग्निमरुतः अग्निविश्वान् देवान् अग्निं इंद्रासोमौ इन्द्रं अग्नामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधान देवताः गृहसिद्धचरुद्रव्येण शेषेण स्विष्टकृतमग्निमिध्मसन्नहनेन रुद्रमयासमग्निं देवान् विष्णुमग्निं वायुं सूर्यं प्रजापतिंचैताः प्रायश्चित्तदेवता आज्येन ।। ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निं मरुतश्चाज्येन विश्वान्देवान् संस्रावेण अंगदेवताः प्रधानदेवताः सर्वाः सन्निहिताः संतु एवं सांगोपांगेन कर्मणा सद्योयक्ष्ये ।। समस्तव्याहृतीनां परमेष्ठीप्रजापतिः प्रजापतिर्बृहती अन्वाधान समिद्धोमेवि०।। ॐ भूर्भुवःस्वः स्वाहा प्रजापतय इदंनमम ।।

अग्न्यायतनादष्टांगुलपरिमिते देशे ऐशानीं दिशमारभ्य प्रदक्षिणसमन्तात्सोदकेन पाणिना त्रिः परिमृज्य पूर्वमुपरि निहितदर्भैर्दशांगुलपरिमिते देशे प्राच्यादिषु परिस्तृणीयात्। तत्र प्राच्यां प्रतीच्यां च उदगग्रा दर्भाः । अवाच्यामुदीच्यां चप्रागग्राः। पूर्वपश्चात्परिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणं ।। उत्तरपरिस्तरणं तु तदग्रयोरधस्तात् ।। ते चदर्भाः अनियतसंख्या एकैकस्यां दिशिचत्वारश्चत्वारइत्येवंषोडशवा ततोऽग्नेर्दक्षिणतो ब्रह्मासनार्थं उत्तरतश्च पात्रासादनार्थं कांश्चित्प्रागग्रान्दर्भानास्तृणीयात् ।। अग्नेरीशानतस्त्रिरुंभसा परिषिच्य उत्तरास्तीर्णेषु दर्भेषु दक्षिणसव्यपाणिभ्यां क्रमेण ।।

चरुस्थालीप्रोक्षिण्यौ दर्वीस्रुवौ प्रणीताऽज्यपात्रे इध्माबर्हिषी चेति द्वे द्वे उदगपवर्गं प्राक्संस्थं न्युब्जान्यासादयेत्। ततः प्रोक्षणीपात्रमुत्तानंकृत्वा, तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रं कुशद्वयरूपे पवित्रे निधाय॥ शुद्धाभिरद्भिस्तत्पात्रं पूरयित्वा गधपुष्पाक्षतादि क्षिप्त्वा हस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामुदगग्रे पृथक्पवित्रे धृत्वा अपस्त्रिरुत्पूय पात्राण्युतानानि कृत्वा, इध्मं च विसृज्य, सर्वाणि पात्राणि त्रिः प्रोक्षेत् ॥ ता आपः किंचित्कमंडलौ क्षिपेदित्येके प्रणीता पात्रं अग्नेःप्रत्यङनिधाय ॥ तत्र प्रागग्रे पवित्रे निधाय उत्पूताभिरद्भिस्तत्पात्रं पूरयित्वा। गंधपुष्पाक्षतान्निक्षिप्यमुखसममुद्धृत्य ॐप्रणय, अग्नेरुत्तरतो दर्भेषु निधाय, ते पवित्रे गृहीत्वा अन्यैर्दर्भैराच्छादयेत्, ॥ ते पवित्रेआज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्य, अग्नेरुत्तरतःस्थितांगारान्भस्मना सहाग्नेरुदक्परिस्तरणाद्बहिर्निरुह्य तेष्वाज्यपात्रमधिश्रित्य, ज्वलतादर्भोल्मुकेन, अवज्वल्य अंगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रक्षिप्य। (गृहसिद्धान्नं चरुस्थालीस्थानासादितपात्रेनिधाय)पुनर्ज्वलतातेनैवदर्भोल्मुकेनचरुणासहाज्यं त्रिः पर्यग्नि कृत्वा तदुल्मुकमपास्य अपःस्पृष्ट्वा, आज्यपात्रं भुविकर्षन्निवोदगुद्वास्य ॥ अंगारानग्नौ प्रास्य अपःस्पृष्ट्वा तत्रस्थमेवाज्यं। सवितुष्ट्वा हिरण्यस्तूपः संवितापुरउष्णिक्॥ आज्यस्योत्पवने विनियोगः॥ ॐसवितु

ष्ट्वा। प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेणवसोः सूर्यस्य रश्मिभिः। प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीं पवित्रं (उत्तान-पाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामन्तरयोरसंसृष्टगृहीताभ्या-मुदगग्राभ्यां ते पवित्रे अद्भिः प्रोक्ष्य अग्नौ प्रहरेत्) ॥ ॐ स्कन्दायस्वाहा॥ स्कंदायेदं नमम। अथाग्नेः पश्चादात्मनोऽग्रतो भूमिं प्रोक्ष्य तत्र बर्हिःसन्नहनीं रज्जुमुदगग्रां प्रसार्यतस्यां बर्हिः प्रागग्रमुदकपवर्गमविरलमास्तीर्य तस्मिन्नाज्यपात्रं निधाय स्रुवादिसंमार्जयेत्॥ दक्षिणहस्तेन स्रुक्स्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय स्रुवं वामहस्ते गृहीत्वा दक्षिणहस्तेन स्रुवस्य बिलं दर्भाग्रैः प्रागादिप्रागपवर्गं त्रिःसंमृज्य। अधस्ताद्दर्भाग्रैरेव अभ्यात्मं बिलपृष्ठं त्रिःसंमृज्य। ततो दर्भाणां मूलैःदण्डस्य अधस्ताद्बिल पृष्ठादारभ्य यावदुपरिष्ठाद्बिलं तावत्त्रिः संमृज्य प्रोक्ष्य प्रताप्य आज्यस्थाल्या उत्तरतो निधाय॥ तैरेवदर्भैः जुहूंचै वमेव संमृज्य प्रोक्ष्य प्रताप्य स्रुवादुत्तरतो निधाय दर्भान् अद्भिः क्षालयित्वा अग्नावनुप्रहरेत्॥

गृहसिद्धान्नं अग्नावधिश्रित्य अभिघार्य त्रिःप्रोक्ष्य उदगुद्वास्य अग्न्याज्ययोर्मध्येन नीत्वा आज्याद्दक्षिणतोबर्हिषिसांतरमासाद्य पुनरप्यभिघार्य नवाभिघार्य। अग्न्यायतनादेकादशांगुलपरिमितेदेशे अग्निं समंत्रकमभ्यर्चयेत्॥ विश्वानिन इति तिसृणांवसुश्रुतोऽग्निस्त्रिष्टुप् द्वयोरर्चनेऽन्त्यायाउपस्थानेवि० ॐ विश्वानिनो दुर्गहाजातवेदः। ॐ सिंधुंननावादुरितातिपर्षि।

ॐ अग्ने अत्रिवन्नमसागृणानः । ॐ अस्माकं बोध्यविताततूनां ॥
ॐ यस्त्वाहृदाकीरिणामन्यमानः । ॐ अमर्त्यंमर्त्यो जोहवीमि ॥
ॐ जातवेदो यशोअस्मसुधेहि । ॐ प्रजाभिरग्ने अमृतत्वमश्यां ॥
ॐ यस्मैत्वंसुकृते जातवेदउलोकमग्नेकृणवः स्योनम् ।
अश्विनंसपुत्रिणंवीरवंतं गोमंतं रयिंनशते स्वस्ति ॥

आत्मानंचालंकृत्य हस्तंप्रक्षाल्य ॥ इध्मबन्धनरज्जुमिध्मस्थाने निधाय ॥ पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेण त्रिरभिघार्य मूलमध्ययोर्मध्यभागे गृहीत्वा । अयंते वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महवने वि०॥ ॐअयंत इध्म आत्मा जातवेद स्तेनेध्यस्व वर्धस्व चेद्ध वर्धयचास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयस्वाहा ॥ जातवेदसेग्नयइदंनमम । स्रुवेणाज्यमादाय अग्नेरायतनस्य वायव्य कोणमारभ्याग्नेयकोणपर्यंतं प्रजापतिपदं मनसास्मरन् प्रजा पतये स्वाहा ॥ प्रजपतय इदं नमम ॥ नैर्ऋत्यकोणमारभ्य ईशानीकोणपर्यंतं प्रजापतिपदं मनसास्मरन् प्रजापतये स्वाहा प्रजापतय इदं न मम॥ उत्तरतःअग्नयेस्वाहा । अग्नय इदं न मम ॥ दक्षिणतः सोमाय स्वाहा । अग्नय इदं न मम ॥ अथ प्रधान होमः॥ ॐसावित्र्यैस्वाहा सावित्र्या इदं नमम। ॐ ब्रह्मणेस्वाहा ब्रह्मण इदं०। श्रद्धायैस्वाहा श्रद्धाया इदं०। ॐमेधायैस्वाहा मेधायाइदं०। ॐ प्रज्ञायैस्वाहा प्रज्ञाया इदं। ॐधारणायै स्वाहा धारणाया इदं०। ॐ सदसस्पतये स्वाहा

सदसस्पतय इदं० । ॐ अनुमतये स्वाहा अनुमतय इदं० ।
ॐ छन्दोभ्य ऋषिभ्यः स्वाहा छंदोभ्य ऋषिभ्य इदं०, ॥
(अत्र अवदानधर्मः ।। स्रुवेण स्रुच्याज्यमुपस्तीर्य । चरुं मध्या दंगुष्ठपर्वमात्रं तिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्रा भिर्नखसंस्पर्शमकुर्वन्नवदाय दर्व्यामोप्य ततश्चरुपूर्वभागं प्राग ग्राभिस्ताभिस्तथैवावदाय दर्व्यामोप्य पात्रस्थं हविरभिघार्यं दर्वीस्थं अवत्तंचाभिघार्य विधूमज्वालाग्नौ आज्यभागयो- र्मध्यदेशे तत्प्रत्यक्देशे वा आच्छादयन्निव दर्व्या वामपार्श्वेण हावयेत् ॥ ) (अथ पंचावत्तीचेत्तिष्ठन् ॥
ॐ प्रसूतोभक्षमंकरंचरावपिस्तोमंचेमंप्रथमः सूरिरुन्मृजे ।
सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥
इति पठित्वोपविश्य एकमवदानमधिकं गृह्यतामित्याचार्यं प्रार्थयेत् मध्यात्पूर्वार्धात्पश्चार्धाच्च त्रिर्हविषोऽवदाय अभि- घार्यजुहुयात् ॥ ) अग्निमीळे वैश्वामित्रो मधुच्छंदाग्निर्गायत्री उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥
ॐ अग्निमीळेपुरोहितं यज्ञस्यदेवमृत्विजं । होतारं रत्नधातमंस्वाहा ॥
अग्नय इदं न मम ॥ १ ॥ कुषुंभकस्तदगस्त्योप्तृणसुर्या अनुष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥
ॐ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ।
वृश्चिकस्यारसं विषमरसं वृश्चिकते विषंस्वाहा ॥
अप्तृणसुर्येभ्य इदं० न मम ॥ २ ॥ त्वमग्ने शौनको

गृत्सदोग्निर्जगती उत्सर्जन प्रधान गृहसिद्धचरुहोमे वि० ॥

ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणि स्त्वमद्भ्यस्त्वमश्मनस्परि ।

त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणां नृपते जायसे शुचिःस्वाहा ॥

अग्नय इदं न मम ॥ ३ ॥ आवदन्गृत्समदः शकुन्तो जगती उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥

ॐ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ।

यदुत्पतन्वदसिकर्करिर्यथा बृहद्वदेमविदथे सुवीराःस्वाहा ॥

शकुंतायेदं न मम ॥ ४ ॥ सोमस्यमागाथिनो विश्वामित्रोऽग्निस्त्रिष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥

ॐ सोमस्यमातवसंवक्ष्यग्ने वह्निंचकर्थविदथेयजध्यै ।

देवाँ अच्छादीद्यद्युंजे अद्रिं शमाये अग्ने तन्वं जुषस्वस्वाहा ॥

अग्नय इदं न मम ॥ ५ ॥ गृणानाभार्गवोजमदग्निर्मित्रावरुणौ गायत्री उत्सर्जनप्रधानगृहसिद्धचरुहोमेवि० ॥

ॐ गृणानाजमदग्निनायोनावृतस्यसीदतम् ।

पातंसोममृतावृधास्वाहा ॥ मित्रावरुणाभ्यामिदं न मम ॥६॥

त्वांह्यग्नेगोतमो वामदेवोग्निरष्टी उत्सर्जनप्रधानगृहसि० ।

ॐ त्वांह्यग्नेसदमित्समन्यवो देवासो देवमरतिंन्येरिरइतिक्रत्वान्येरिरे । अमर्त्यंयजतमर्त्येष्वा देवमादेवं जनतप्रचेतसं विश्वमादेवं जनतप्रचेतसंस्वाहा ॥ अग्नय इदं न मम ॥ ७ ॥ धामंते-

गोतमोवामदेव आपो बृहती उत्सर्जनप्रधानगृहसिद्ध० वि०

ॐ धामंते विश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं १ न्तरायुषि ।
अपामनींकेसमिथेय आभृतस्तमंश्यामममधुमंतंतऊर्मिंस्वाहा ॥

अद्भ्य इदं न मम ॥ ८ ॥ अबोध्यात्रेयो बुधगविष्ठिराव ग्निस्त्रिष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥

ॐ अबोध्यग्निःसमिधाजनानां प्रतिधेनुमिवायती मुषासं ।
यह्वाइवप्रवयामुज्जिहानाः प्रभानवः सिस्रतेनाकमच्छस्वाहा ॥

अग्नय इदं न मम ॥ ९ ॥ गन्तान आत्रेय एवया मरुन्मरु तोतिजगती उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥

ॐ गंतानोयज्ञंयज्ञियाःसुशमि श्रोताहवमरक्षएवयामरुत् । ज्येष्ठा सोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदःस्वाहा ॥

मरुद्भ्य इदं न मम ॥ १० ॥ त्वंह्यग्ने बार्हस्पत्यो भारद्वाजोग्निस्त्रिष्टुप् उत्सर्जनप्रधान गृहसिद्धचरुहोमेवि०॥

ॐ त्वंह्यग्नेप्रथमोमनोता स्याधियो अभवोदस्महोता ।
त्वंसींवृषन्नकृणोर्दुष्टरींतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥

अग्नय इदं न मम ॥ ११ ॥ योनःस्वः पायुर्भारद्वाजो विश्वेदेवा अनुष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥

ॐ योनःस्वोअरणोयश्चनिष्ट्योजिघांसति ।
देवास्तंसर्वेधूर्वंतु ब्रह्मवर्ममभांतरंस्वाहा ॥

विश्वेभ्यो देवेभ्य इदं न मम ॥ १२ ॥ अग्निनरो मैत्रावरु

णिर्वसिष्ठोग्निर्विराट् उत्सर्जनप्रधानगृहसिद्धचरुहोमेवि० ॥
ॐ अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तं ।
दूरेदृशं गृहपतिमथर्युंस्वाहा ॥ अग्नय इदं न मम ॥ १३ ॥
प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठइंद्रासोमावनुष्टुप् उत्सर्जनप्रधा०
ॐ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यःस्वाहा ॥
इंद्रासोमाभ्यामिदं न मम ॥ १४ ॥ माचित्काण्वःप्रगाथ
इंद्रो बृहती उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥
ॐ माचिदन्यद्विशंसत सखायो मारिषण्यत ।
इंद्रमित्स्तोतावृषणंसचासुते मुहुरुक्थाच शंसतस्वाहा ॥
इंद्रायेदं न मम ॥ १५ ॥ आग्नेयाहिकाण्वः सौभरिरग्ना
मरुतोनुष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे वि० ॥
ॐ आग्नेयाहिमरुत्सखा रुद्रेभिः सोमपीतये ।
सोभर्या उपसुष्टुतिं मादयस्वस्वर्णरेस्वाहा ॥
अग्नामरुद्भ्यइदं न मम ॥ १६ ॥ स्वादिष्टयामधुछंदाः
पवमानः सोमोगायत्री उत्सर्जनप्र० गृहसिद्धचरुहोमे वि० ॥
ॐ स्वादिष्टयामदिष्टया पवस्व सोमधारया । इंद्रायपातवेसुतः ०॥
पवमानाय सोमायेदं न मम ॥ १७ ॥ यत्तेराजन् मारीचः
कश्यपःपवमानःसोमःपंक्तिःउत्सर्जनप्र० गृहसिद्धचरुहोमेवि०
ॐ यत्तेराजन्च्छृतंहविस्तेनसोमाभिरक्षनः ।
अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदोपरिस्रव०॥

पवमानाय सोमायेदं०॥ १८ ॥ अग्रेबृहन्नाप्त्यस्त्रितोऽग्निस्त्रिष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे विनियोगः ॥

ॐ अग्रेबृहन्नुपसांमूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात्॥
अग्निर्भानुनारुशतास्वंगआजातो विश्वासद्मान्यप्राःस्वाहा ॥

अग्नय इदं न मम ॥ १९ ॥ समानीवःसंवननः संज्ञानमनुष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमे विनियोगः ॥

ॐ समानीवआकूतिः समाना हृदयानि वः ।
समानमस्तुवोमनोयथावःसुसहासतिस्वाहा ॥ संज्ञानायेदं२०

स्विष्टकृतं द्विरभिघार्य । यदस्येति हिरण्यगर्भोग्निः स्विष्टकृदतिधृतिः स्विष्टकृद्धोमे वि० ॥

ॐ यदस्यकर्मणोत्यरिरिचं यद्वान्यूनमिहाकरम् ॥ अग्निष्ट्त्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे ॥ अग्नय स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नःकामान्त्समर्धय स्वाहा ॥ स्विष्टकृतेऽग्नय इदं न मम ॥ (अग्नावीशानदेशे जुहुयात्) त्रिःसंनहनेन रुद्रं रुद्राय स्वाहा ॥ रुद्रायेदं न मम ॥ अपउपस्पृश्य ॥

सर्वैःसह प्राणानायम्य ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसने विनियोगः ॥ पृथ्वित्वयाधृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरुचासनम् । अपसर्पंतु तेभूता येभूता भुवि संस्थिताः ॥

येभूता विघ्नकर्तारस्तेगच्छंतु शिवाज्ञया, अपक्रामंतु भूतानि पिशाचाःसर्वतो दिशम् । सर्वेषामविरोधेनब्रह्मकर्म समारभे शरावे जलंदर्भांश्चादाय ॥

॥ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमि ॥

इति तज्जलमुपस्पृश्यदर्भगर्भंब्रह्मार्जलिं कृत्वा, दक्षिणाङ्के निधाय प्रणवादिस्वयं पठन्नन्यान्युपविष्टान्वाचयेत् ॥ प्रणवस्य परब्रह्मऋषिः परमात्मा देवता दैवीगायत्रीछंदः समस्त व्याहृतीनां प्रजापतिःप्रजापतिर्बृहती गायत्र्या गातिनो विश्वामित्रः सवितागायत्री ॥ अग्निमीळ इत्यादीनां छंदसां मधुच्छंदादय ऋषयः अग्न्यादयो देवताः गायत्र्यादीनि छंदांसि सर्वेषां उत्सर्जने विनियोगः ॥

ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

ॐ अग्निमीळे पुरोहितं । यज्ञस्य देवमृत्विजं । होतारंरत्नधातमं॥
अग्निःपूर्वेभिर्ऋषिभिः । ईड्योनूतनैरुत । सदेवां एहवक्षति ॥
अग्निनारयिमश्नवत् । पोषमेवदिवेदिवे । यशसंवीरवत्तमं ।
अग्नेयंयज्ञमध्वरं । विश्वतःपरिभूरसि । स इद्देवेषु गच्छति ।
अग्निर्होताकविक्रतुः । सत्यश्चित्रश्रवस्तमः । देवोदेवेभिरागमत् ॥

यदङ्गदाशुषेत्वं । अग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमंगिरः ।
उपत्वाग्नेदिवेदिवे । दोषावस्तर्धियावयं । नमोभरंत एमसि ॥
राजंतमध्वराणां । गोपामृतस्य दीदिविं । वर्धमानं स्वेदमे ॥
सनःपितेवसूनवे । अग्नेसूपायनोभव । सचस्वानःस्वस्तये ॥२॥
वायवायाहिदर्शत ॥ अग्निर्वै देवानामवमो विष्णुः परमः । अथ
महाव्रतम् । एषपन्था एतत्कर्म । अथातः संहिताया उपनिषत्
विदा मघवन्विदा । महाव्रतस्य पंचविंशतिसामिधेन्यः ।
इषेत्वोर्जेत्वा । अग्नआयाहि वीतये । शन्नोदेवीरभिष्टये ॥
अथैतस्य समाम्नायस्य । समाम्नायःसमाम्नातः । मयरसतज
भनलगसंमितं । गौः । ग्मा । ज्मा । क्ष्मा । पंचसंवत्सरमयं ।
अथ शिक्षां प्रवक्ष्यामि । वृद्धिरादैच् । योगीश्वरं याज्ञवल्क्यं ।
नारायणं नमस्कृत्य । अथातो धर्मं व्याख्यास्यामः । अथातो
धर्मजिज्ञासा । अथातो ब्रह्मजिज्ञासा ॥

तच्छंयोरावृणीमहे गातुंयज्ञाय गातुंयज्ञपतये दैवीस्वस्तिरस्तुनः ।
स्वस्तिर्मानुषेभ्यः ऊर्ध्वंजिगातुभेषजं शंनो अस्तुद्विपदेशंचतुष्पदे ॥
ॐ नमोब्रह्मणे नमोअस्त्वग्नयेनमःपृथिव्यै नम ओषधीभ्यः ।
नमोवाचेनमोवाचस्पतये नमोविष्णवे महतेकरोमि इति त्रिः ॥
ॐशांतिःशांतिःशांतिः ॥ वृष्टिरसिवृश्च मे पाप्मानमृतात्सत्यमुपा
याम् । सर्वे उत्सृष्टाः वै वेदाः इत्युक्त्वा जलं स्पृशयुः ॥

ततः अयाश्चेतिविमदोऽया अग्निःपंक्तिःप्रायश्चित्ताज्यहोमे०

ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि ।

अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥

अयासेऽग्नय इदं न मम ॥ अतो देवा मेधातिथिर्देवागायत्री प्रायश्चित्ताज्यहोमे विनियोगः ॥

ॐ अतोदेवाअवंतुनो यतोविष्णुर्विचक्रमे ।

पृथिव्याःसप्तधामभिःस्वाहा ॥ देवेभ्य इदं न मम ॥

इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्रीप्रायश्चित्ताज्यहोमे०

ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूढ्ळमस्यपांसुरेस्वाहा॥

विष्णव इदं न मम ॥ व्यस्तसमस्तव्याहृतीनां विश्वामित्र जमदग्निभरद्वाजप्रजापतयऋषयः अग्निवायुसूर्यप्रजापतयो-देवताःगायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसिप्रायश्चित्ताज्यहो०॥

ॐभूःस्वाहा । अग्नयेश्री अनिरुद्धाय इदं न मम ।

ॐभुवःस्वाहा । वायवे श्रीप्रद्युम्नाय इदं न मम ।

ॐस्वःस्वाहा । सूर्याय श्रीसङ्कर्षणाय इदं न मम ।

ॐभूर्भुवःस्वःस्वाहा प्रजापतये श्रीवासुदेवाय इदं न मम ॥

अनाज्ञातमितिमन्त्रद्वयस्यहिरण्यगर्भोग्निरनुष्टुप् ज्ञाताज्ञात-दोषनिबर्हणार्थं प्रायश्चित्ताज्यहोमे वि० ॥

ॐ अनाज्ञातंयदाज्ञातं यज्ञस्य क्रियते मिथु ।

अग्नेतदस्यकल्पयत्वंँहिवेत्थ यथातथंँस्वाहा॥ अग्नयइदं०॥

ॐ पुरुषसंमितोयज्ञा यज्ञःपुरुषसंमितः ।
अग्नेतदस्यकल्पयत्वꣳहिवेत्थ यथातथꣳस्वाहा ॥ अग्नयइदं०
यत्पाकत्रेत्याप्त्यस्त्रितोग्निस्त्रिष्टुप् प्रायश्चित्ताज्यहोमेवि०
ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ।
अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँ ऋतुशोयजातिस्वाहा॥
अग्नय इदं न मम ॥ यद्वोदेवा अभितपा मरुतस्त्रिष्टुप्
प्रायश्चित्ताज्यहोमे विनियोगः ॥
ॐ यद्वोदेवाअतिपातयानि वाचाचप्रयुती देवहेळनं ।
अरायो अस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वाहा॥
मरुद्भ्य इदं न मम ॥ ( यज्ञोपघातादौ प्रायश्चित्तानि ।
अस्मिन्कर्मणि कृमिकीटपिपीलिकामक्षिकाद्युपघातदोषपरि
हारार्थं द्वे मिंदाहुती होष्यामि ॥
ॐयन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहाजातवेदाविचर्षणिस्वाहा॥
मिंदवतेग्नय इदं न मम॥ ॐ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः
पुनर्मे अश्विनायुवं चक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्नयइदं०॥
अस्मिन्कर्मणि स्वराक्षरपदवर्णभ्रेषजनितप्रत्यवाय परि-
हारार्थं अभिर्गीर्भिरित्येकामाज्याहुतिं होष्यामि ॥
ॐ आभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः ।
यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा॥
इंद्राय हरिवत इदं न मम ) सांगतासिद्ध्यर्थंसर्वप्रायश्चित्तं

करिष्ये ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतय श्रीवासुदे-
वाय इदं न मम ॥ संस्रावेण ॐ विश्वेभ्योदेवेभ्यः स्वाहा ॥
विश्वेभ्योदेवेभ्यःसंस्रावभागभ्य इदं न मम ॥ हविः शेषमुदं
गुद्वास्य बर्हिषि पूर्णपात्रं निनयेत् ॥

पूर्णमसिपूर्णमेभूयाःसपूर्णमसिसुपूर्णमेभूयाः सदसिसन्मे -
भूयाःसर्वमसिसर्वमेभूयाः ॥ ॥ अक्षितिरसिमामेक्षेष्ठाः ॥
प्राच्यांदिशिदेवाऋत्विजो मार्जयंतां। दक्षिणस्यांदिशिमासाः
पितरो मार्जयन्तां। अपउपस्पृश्य प्रतीच्यांदिशि ग्रहाःपशवो
मार्जयन्तां। उदीच्यां दिश्याप ओषधिवनस्पतयो मार्जयंतां।
ऊर्ध्वायांदिशि यज्ञःसंवत्सरः प्रजापतिर्मार्जयन्तां ॥ आपो
अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् मार्जने विनियोगः ॥
ॐ आपो अस्मान्मातरः शुंधयंतुघृतेन नोघृतप्वः पुनंतु ।
विश्वंहिरिप्रंप्रवहंति देवीरुदिदाभ्यः शुचिरापूतएमि ॥
इदमापः सिंधुद्वीप आपोऽनुष्टुप् मार्जने विनियोगः ॥
ॐ इदमापःप्रवहत यत्किंचदुरितंमयि ।
यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम् ।
सुमित्र्यानआपओषधयःसंतु । दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टि ।
यंचवयंद्विष्मस्तंहंन्मि । इतिनैर्ऋत्यांदिशि कुशाग्रैरपःसिंचेत् ॥
माहंप्रजांपरासिचंयानःसयावरीःस्थन ।
समुद्रेवोनिनयानि स्वंपाथो अपीथ ॥

ता आपःसमुद्रं गच्छेयुरिति चिंतयन् गङ्गायमुनासरस्वत्या-
दिनदीः स्मरन् अञ्जलिस्थदर्भैरात्मानंअन्यांश्च मार्जयेत् ॥

ततः अग्नेर्वायव्यदेशे तिष्ठन् । अग्ने त्वन्न इति चतसृणां-
गौपायनालौपायना वा बंधुःसुबंधुःश्रुतबंधुर्विप्रबन्धुश्चैकै-
कर्चा ऋषयः अग्निर्देवता द्विपदाविराट्छंदः अग्न्युपस्थाने०

ॐ अग्नेत्वन्नोअंतमउतत्राताशिवोभवावरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छानाक्षिद्युमत्तमं रयिंदाः ॥
सनोबोधिश्रुधीहवमुरुष्याणो अघायतःसमस्मात् ।
तंत्वाशोचिष्ठदीदिवः सुम्नायनूनमीमहेसखिभ्यः ॥ उपविश्य
प्रागादि परिस्तरणान्युत्तरे विसृजेत् ॥ परिसमूहनपर्युक्षणे
कृत्वा ॥ विश्वानिन इति अग्निं गंधादिभिश्च पूजयित्वा ॥

ॐ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।
अतूर्तंश्रावयत्पतिंपुत्रंददाति दाशुषे ॥
अग्निर्ददातिसत्पतिं सासाहयोयुधानृभिः ।
अग्निरत्यंरघुष्यदंजेतारमपराजितं ॥ अग्नयेनमःमंत्रपुष्पंसमर्प
यामि मानस्तोक इत्यस्यकुत्सोरुद्रो जगती विभूतिग्रहणेवि०

ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ।
वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥

त्र्यायुषं जमदग्नेरिति ललाटे। कश्यपस्य त्र्यायुषमितिकंठे।
अगस्त्यस्य त्र्यायुषं नाभौ। यद्देवानां त्र्यायुषं दक्षिणस्कंधे।

तन्मे अस्तुत्र्यायुषं वामस्कन्धेसर्वमस्तुशतायुषमिति शिरसि
ओं च मे स्वरश्चमे यज्ञोपचते नमश्च ।

यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मै ते नमः ॥ अग्नये नमः ।

ॐस्वस्ति । श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिश्रियंबलम्।आयुष्यं तेजआरोग्यं देहि मे हव्यवाहन । देहिमे हव्यवाहनोन्नमइति

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु ।
न्युनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥

अनेन उत्सर्जनहोमाख्येन कर्मणा भगवान्अग्न्यंतर्गतहरिणी पतिपरशुरामःप्रीयतां प्रीतोभवतु ॥ श्रीकृष्णार्पणमस्तु ॥

## उत्सर्जनोपाकर्मसंभारा

रंगवल्लीदर्भदूर्वामृत्समिद्गोमूत्रगोमयपयोदधिघृतभस्म तिलयवतंदुलतांबूलपूगफलनारिकेलफलकदलीफलकर्कटीव- स्त्रयज्ञोपवीतगंधपुष्पाक्षतधूपदीपगुडशर्करचरुदधिसक्तिवधन वेणुधमनीपलाशपर्णाश्मपर्णस्रुक्स्रुवपर्णपुटासनाचमनपात्रता- म्रकलशजलसेचनभाजनानिसंपाद्य ॥ नूतनब्रह्मचारिणस्तु- वस्त्रमेखलाजिनकौपीनदण्डाः पुण्याहवाचनंचेति विशेषः ॥

॥ स्नानविधिः ॥

भस्मगोमयमृत्तंदुलतिलकुशदूर्वादिसंभृतसंभारः उदकतीरं गत्वा ॥ सर्वैःसह आचम्य प्राणानायम्य देशकालौ स्मृत्वा उत्सर्जनांगत्वेन सर्वैःसह गणस्नानं करिष्ये । आपोहिष्ठेति तृचेनस्नात्वा आचम्य । उत्सर्जनांगत्वेन भस्मस्नानं करिष्ये। भस्मादाय ॥

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणो-
धिपतिर्ब्रह्माशिवोमे अस्तुसदाशिवोम् ॥ शिरसि ॥

ॐ तत्पुरुषायविद्महेमहादेवायधीमहि। तन्नोरुद्रःप्रचोदयात् मुखे।

ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ।
सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदये ॥

ॐ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमः
कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनाय
नमःसर्वभूतदमनायनमोमनोन्मनायनमः । गुह्ये ॥

ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ।
भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादयोः ॥

अग्निरिति भस्म वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वंह्वाइदं भस्म ।

ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ।
वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥

सर्वाङ्गे विलिप्य स्नात्वा आचम्य ॥ उत्सर्जनांगत्वेन गोमयस्नानं करिष्ये ॥

ॐ गन्धद्वारांदुराधर्षां नित्यपुष्टां करीषिणीं।
ईश्वरीं सर्वभूतानां तामिहोपंह्वये श्रियं ॥ गोमयमादाय ॥

अग्रमग्रंचरन्तीनामोषधीनां वने वने ।
तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥
तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ॥

इति शिरःप्रभृत्यंगानि विलिप्य स्नात्वा आचम्य ॥
उत्सर्जनाङ्गत्वेन मृत्तिकास्नानं च करिष्ये ॥

ॐ बळित्थापर्वतानांखिद्रं बिभार्षिपृथिवि ।
प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि ॥ इति भूमिंप्राथ्र्य ।

ॐ मावोरिषत्खनितायस्मैचाहंखनामिवः ।
द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं ॥ इति खनित्वा ॥

ॐ स्योनापृथिविभवानृक्षरानिवेशनि ।
यच्छानःशर्मसप्रथं ॥ इति मृदमादाय ॥

ॐ आयनेतेपरायणे दूर्वारोहंतुपुष्पिणीः ।
ह्रदाश्चपुण्डरीकाणि समुद्रस्य गृहा इमे ॥ इतिदूर्वामादाय॥

तत्संवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियो यो नः प्रचोदयात् ॥
प्रोक्ष्य भूमौ निधाय ॥

ॐ त्रातारमिंद्रमवितारमिंद्रंहवे हवे सुहवं शूरमिंद्रं । ह्वयामि-
शक्रं पुरुहूतमिंद्रं स्वस्तिनोमघवा धात्विंद्रः ॥ पूर्वतःक्षिपेत्
ॐ यमाय सोमं सुनुत यमायं जुहुताहविः ।
यमं हयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ दक्षिणतः
ॐ तत्वायामिब्रह्मणावंदमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेहबोध्युरुशंसमान आयुप्रःमोषीः। पश्चिमतः
वयंसोमव्रतेतवमनस्तनू षुबिभ्रतः । प्रजावंतःसचेमहि ॥ उत्तरतः
ॐतत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे। भोजेष्वस्माँअभ्युच्चरासदा।
ॐ अधःपश्यस्वमोपरिसंतरांपादकौहर । [उपरिष्टात्
मातेकशप्लकौदशन्स्त्रीहिब्रह्माबभूविथ ॥ अधः
(सर्वैमृदं वामहस्ते गृहीत्वा जलेनार्द्रीकृत्य)
ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।
सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ शिरसि
ॐ अक्षीभ्यांतेनासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामि ते ॥ मुखे
ॐ ग्रीवाभ्यस्तउष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मंदोषण्य१ मंसाभ्यां बाहुभ्यां विवृहामि ते ॥ कण्ठे
ॐ आंत्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मंमतस्नाभ्यां यक्रःप्लाशिभ्यो विवृहामि ते ॥ हृदये
ॐ नाभानभिंनआददेचक्षुश्रितसूर्येसचा। कुवेरपत्यमादुहे॥ नाभौ

ॐ त्वमिंद्रसजोषसमर्कंबिभर्षिबाह्वोः ।वज्रंशिशानओजसा ।बाह्वोः

ॐ सोमानंस्वरणंकृणुहिब्रह्मणस्पते।कक्षीवंतंयऔशिजः । कक्ष्योः

ॐ यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते। उर्वीरापोनकाकुदः ॥

कुक्ष्योः) ॐ बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोति समनावगत्य।

इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः पृष्ठे ॥

ॐ ऊरुभ्यांते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां ।

यक्ष्मंश्रोणिभ्यांभासदाद्धंससोविवृहामि ते ॥ ऊर्वोः

ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ।

यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामि ते ॥ जान्वोः

ॐ एतावानस्य महिमातोज्यायांश्चपूरुषः ।

पादोस्यविश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ पादयोः

ॐ यस्यविश्वानि हस्तयोःपंचक्षितीनां वसु ।

स्पाशयं स्वयो अस्मत्ध्रुग्दिव्येत्राशनिर्जहि ॥ हस्तयोः

ॐ अङ्गादंगाल्लोम्नोलोम्नो जातंपर्वणिपर्वणि ।

यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥

इति मंत्रेण पुरुषसूक्तेन च सर्वाङ्गे विलिप्य ॥

अश्वक्रांतेरथक्रांते विष्णुक्रांतेवसुंधरे ।

शिरसाधारयिष्यामि रक्षस्व मां पदेपदे ॥

इति सतिलदूर्वामृदं शिरसि निधाय। मृत्तिकास्नानंप्रक्षाल्य

भूमिंप्रार्थयेत्— भूमिर्धेनुर्धरणीलोकधारिणी ।
उद्धृतासि वराहेणकृष्णेनशतबाहुना ॥
मृत्तिकेहनमेपापं यन्मया दुष्कृतंकृतं ।
मृत्तिकेब्रह्मदत्तासि काश्यपेनाभिमंत्रिता ॥
मृत्तिकेदेहिमेपुष्टिं त्वयिसर्वं प्रतिष्ठितं ।
मृत्तिकेप्रतिष्ठिते सर्वंतन्मेनिर्णुदमृत्तिके ॥
त्वयाहतेनपापेन गच्छामिपरमांगतिं ॥

तीर्थं प्रार्थयेत्-ॐ हिरण्यशृंगं वरुणंप्रपद्येतीर्थंमे देहि याचितः।
यन्मयाभुक्तमसाधूनां पापेभ्यश्चप्रतिग्रहः ।
यन्मेमनसावाचा कर्मणावा दुष्कृतंकृतं ।
तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥
नमोग्नयेप्सुमते नमइंद्रायनमोवरुणाय नमो वारुण्यैनमोद्भ्यः ।
यदपांक्रूरं यदमेध्यं यदशांतं तदपगच्छतात् ॥
अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ।
तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥
सोहमपापोविरजोनिर्मुक्तो मुक्तकिल्बिषः ।
नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां ॥
यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥
अवतेहेळइतिद्वयोराजीगर्तिःशुनःशेपोवरुणस्त्रिष्टुप् ॥

वरुणप्रार्थने विनियोगः–

ॐ अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहे हविर्भिः ।
क्षयंनस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥
उदुत्तमंवरुणपाशदस्मदवाधमंविमध्यमं श्रथाय ।
अथावयमादित्यव्रतेयवानागसो अदितयेस्याम ॥

याः प्रवतोवसिष्ठोनद्यः शक्वरीतीर्थाभिमर्शनेवि० ॥

ॐ याःप्रवतोनिवतउद्धतउदन्वतीरनुदकाश्चयाः ।
ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीर-
शिपदाभवंतुसर्वानद्योअशिमिदाभवंतु ॥ इमंमे-
गंगे इति द्वयोःसिंधुक्षित्प्रैयमेधोनद्योजगती तीर्थविलोडनेवि।

ॐ इमंमेगङ्गेयमुनेसरस्वतिशुतुद्रिस्तोमं सचता परुष्ण्या ।
असिक्न्यामरुद्वृधे वितस्तयार्जीकीयेश्रृणुह्यासुषोमया ॥
सितासितेसरिते यत्रसंगथेतत्राप्लुतासोदिवमुत्पतंति ।
ये वै तन्वं १ विसृजंति धीरास्तेजनासो अमृतत्वंभजंते ॥
सागरस्वननिर्घोष दण्डहस्तासुरांतक ।
जगत्ष्टाजगस्त्रन्मर्दिन्नमामित्वां सुरेश्वर ॥
इमं मंत्रसमुच्चार्य तीर्थस्नानं समाचरेत् ॥
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवं ॥

ॐ इदंतेन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्रवहंतिनद्यः ।
सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य ॥

नन्दिनीनलिनीसीतामालती च मलापहा ।
विष्णुपादाब्जसंभूता गंगा त्रिपथगामिनी ॥
भागीरथी भोगवती जान्हवी त्रिदशेश्वरी ।
पुष्कराद्यानितीर्थानि गंगाद्याः सरितस्तथा ॥
आगच्छंतु पवित्राणि स्नानकाले सदा मम ।
गंगागंगेति यो ब्रूयाद्योजनानां शतैरपि ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥

आपोहिष्ठेति तृचस्यांबरीषःसिंधुद्वीप आपोगायत्रीमार्जने वि
ॐ आपोहिष्ठा० ऋ० ३ ॥

समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् मार्जने वि
ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ।
इंद्रोयावज्रीवृषभोरराद्ता आपो देवीरिहमामवंतु ॥
या आपोदिव्या उतवास्रवंतिखनित्रिमाउतवा याःस्वयंजाः ।
समुद्रार्थयाः शुचयः पावकास्ता आपोदेवीरिहमामवंतु ॥
यासांराजावरुणो यातिमध्येसत्यानृते अवपश्यंजनानां ।
मधुश्चुतःशुचयोयाः पावकास्ता आपोदेवीरिहमामवंतु ॥
यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ।
वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥

तरत्समन्दीतिचतसृणांकाश्यपावत्सारःपवमानःसोमोगायत्री
मार्जने विनियोगः ॥
ॐ तरत्संमदीधावतिधारासुतस्यांधसः । तरत्समंदीधावति ॥
उस्रावेदवसूनांमर्तस्यदेव्यवसः । तरत्स० ॥

ध्वस्रयोः पुरुषंत्योरासहस्राणिदद्महे । तरत्स० ॥
आयर्योस्त्रिंशतंतनासहस्राणिचदद्महे । तरत्स० ॥
एतोन्विंद्रमितितिसृणामांगिरसइंद्रासोमावनुष्टुप्मार्जनेवि०।
एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ।
शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥
इंद्रशुद्धोनआगंहिशुद्धः शुद्धाभिरूतिभिः ।
शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥
इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ।
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥
ऋतंचेतिसूक्तस्याघमर्षणोभाववृत्तमनुष्टुप्अघमर्षणेवि० ॥
ॐ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ।
ततोरात्र्यजायततत:समुद्रोअर्णवः ॥
समुद्रादर्णवादधिसंवत्सरोअजायत ।
अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥
सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ।
दिवंच पृथिवींचांतरिक्षमथोस्वः ॥

स्नात्वा, स्नानांगतर्पणं कुर्यात् । ब्रह्मादयो देवाः । तान्देवां स्तर्पयामि । भूर्देवांस्तर्पयामि । भुवोदेवांस्त० । स्वर्देवांस्त० भूर्भुवःस्वर्देवांस्त०। निवीती । कृष्णद्वैपायनादयो ये ऋषयः। तान् ऋषींस्त० । भूऋषींस्त० । भुवऋषींस्त० । स्वऋषीं

स्त० । भूर्भुवःस्वर्ऋषींस्त० ॥ प्राचीनावीती ॥ सोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः । तान् पितृंस्त० । भूः पितृंस्त० । भुवःपितृंस्त० । स्वःपितृंस्त०।भूर्भुस्वः पितृंस्त० । अग्निदग्धाश्च येजीवा येप्यदग्धाःकुलेमम।

भूमौ दत्तेन तोयेन तृप्ता यांतु परां गतिम् ॥

इति जलांजलिं तटे निक्षिप्य ॥

ये के चास्मत्कुलेजाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णंतु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

इति मंत्रेणोत्तरीयवस्त्रं तटे निष्पीड्य ॥ ततः यज्ञोपवीती।

यन्मया दूषितं तोयं शारीरमलसंभवात् ।
तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् ॥

इति यक्ष्मतर्पणं कृत्वा ॥

ज्ञानतोऽज्ञानतो वापि यन्मे दुश्चरितं कृतम् ।
तत्क्षमस्वाखिलं देवि जगन्मातर्नमोऽस्तुते ॥

इति नदींप्रार्थयेत् ॥ इति स्नानविधिः ॥

॥ अथ ऋषिपूजनम् ॥

धृतशुक्लांबरो निवीती ॥ ऋषीन् पूजयेत् ॥ देशकालौ सङ्कीर्त्य उत्सर्जनांगत्वेनअरुंधतीसहितकश्यपादिसप्तर्षिप्रीत्यर्थं आवाहनादिषोडशोपचारैः पूजनं करिष्ये ॥

ॐ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ।
सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदोपरिस्रव ॥

कश्यपाय नमः ।। कश्यपं आवाहयामि ।।

ॐ अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ।

श्येनस्यचिज्जवसानूतनेनागच्छतमश्विनाशंतमेन ।।

अत्रये नमः ।। अत्रिं आवाहयामि ।।

ॐ एवानःस्पृधःसमजासमत्स्विद्रंरारंधिमिथतीरदेवीः ।

विद्यामवस्तोरवसागृणंतो भरद्वाजा उततइन्द्रनूनं ।।

भरद्वाजाय नमः ।। भरद्वाजमावाहयामि ।।

ॐ प्रह्नतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमः सूरिरुन्मृजे ।

सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ।।

विश्वामित्राय नमः ।। विश्वामित्रमावाहयामि ।।

ॐ अभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः।

गौतमाय नमः ।। गौतममावाहयामि ।।

ॐ गृणानाजमदग्निनायोनावृतस्यसीदतं । पातंसोममृतावृधा ।।

जमदग्नय नमः ।। जमदग्नमावाहयामि ।।

ॐ उतासिमैत्रावरुणोवसिष्ठोवश्यांब्रह्मन्मनसोधिजातः ।

द्रप्सं स्कन्नं ब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददंत ।।

वसिष्ठाय नमः ।। वसिष्ठमावाहयामि ।।

ॐ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंधती ।

कौशिकस्ययथासतीतथात्वमपि भर्तरि ।।

अरुंधत्यै नमः ।। अरुंधतीमावाहयामि ।।

भारतदेश संस्कृताविकासाय एव

ॐ तदस्तु मित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् ।
अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥
गृहावै प्रतिष्ठासूक्तं तत्प्रष्ठिततमया वाचा शंस्तव्यं तस्माद्य
द्यपिदूर इवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहि पशूनां
प्रतिष्ठाप्रतिष्ठा । सुप्रतिष्ठितमस्तु । आवाहनादिप्रत्युपचारं
ॐ देवाएतस्यामवदंतपूर्वे सप्तऋषयस्तपसे ये निषेदुः ।
भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन् ॥
इति मंत्रेण षोडशोपचारैः पूजयेत् ॥ इति ऋषिपूजा ॥

॥ ऋष्यादितर्पणम् ॥

साक्षतहस्तःकुशमध्येन ॥

कश्यपं तर्पयामि । अत्रिं त० । भरद्वाजं त० । विश्वामित्रं त० । गौतमं त० । जमदग्निं त० । वसिष्ठं त० । अरुंधतीं त० ।
॥ उपवीती ॥ देवतीर्थेन कुशाग्रैः ॥
सावित्रीं त० । ब्रह्माणं त० । श्रद्धां त० । मेधां त० । प्रज्ञां त० । धारणां त० । सदसस्पतिं त० । अनुमतिं त० । छंदांस्यृषींस्त० । अग्निं त० । अप्तृणसूर्यांस्त० । अग्निं त० । शकुंतं त० । अग्निं त० । मित्रावरुणौ त० । अग्निं त० । अपस्त० । अग्निं त० । मरुतस्त० । अग्निं त० । विश्वान् देवांस्त० । अग्निं त० । इंद्रासोमौ त० । इंद्रं त० । अग्नामरुतस्त० । पवमानसोमं त० । पवमानसोमं त० । अग्निं त० । संज्ञानं त० । ॥ अथब्रह्मयज्ञांगतर्पणम् ॥

प्रजापतिस्तृप्यतु । ब्रह्मातृप्यतु । वेदास्तृप्यंतु । देवास्तृप्यंतु। ऋषयस्तृप्यन्तु । सर्वाणिछंदांसि तृप्यंतु । ओंकारस्तृप्यतु । वषट्कारस्तृप्यतु । व्याहृतयस्तृप्यंतु । सावित्री तृप्यतु यज्ञास्तृप्यन्तु । द्यावापृथिवी तृप्यतां । अंतरिक्षं तृप्यतु । अहोरात्राणि तृप्यन्तु । सांख्यास्तृप्यन्तु । सिद्धास्तृप्यंतु । समुद्रास्तृप्यंतु। नद्यस्तृप्यन्तु । गिरयस्तृप्यन्तु । क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यन्तु । नागास्तृप्यन्तु । वयांसितृप्यन्तु । गावस्तृप्यन्तु । साध्यास्तृप्यन्तु । विप्रास्तृप्यन्तु । यक्षास्तृप्यन्तु । रक्षांसितृप्यन्तु । भूतानितृप्यन्तु । एवमन्तानि तृप्यन्तु ॥

अथ ऋषयः ॥ निवीती ॥ ऋषितीर्थेन कुशमध्येन ॥ शतर्चिनस्तृप्यन्तु । माध्यमास्तृप्यन्तु । गृत्समदस्तृप्यतु । विश्वामित्रस्तृप्यतु । वामदेवस्तृप्यतु । अत्रिस्तृप्यतु । भरद्वाजस्तृप्यतु । वसिष्ठस्तृप्यतु । प्रगाथास्तृप्यन्तु । पावमान्यस्तृप्यन्तु । क्षुद्रसुक्तास्तृप्यन्तु । महासुक्तास्तृप्यन्तु ॥

॥ प्राचीनावीती ॥ (जीवत्पितृकैरंगुष्ठपर्यंतं) पितृतीर्थेन द्विगुणीकृतकुशमूलाग्रैः ॥ सुमन्तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारत महाभारतधर्माचार्यास्तृप्यन्तु । जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृप्यन्तु । गर्गीवाचक्नवी तृप्यतु । वडवाप्रातीथेयी तृप्यतु । सुलभामैत्रेयी तृप्यतु। कहोळंतर्पयामि। कौषीतकं तर्प० । महाकौषीतकं त०। पैंग्यं त० । महापैंग्यं त० । सुयज्ञं त० । सांख्यायनं त० ।

ऐतरेयं त० । महैतरेयं त० । शाकलं त० । बाष्कलं त० । सुजातवक्त्रं त० । औदवाहिं त० । महौदवाहिं त० । सौजामिं त० । शौनकं त० । आश्वलायनं त० । येचान्ये आचार्यास्ते सर्वे तृप्यन्तु ॥

॥ ततः स्वपितृतर्पणम् ॥

अस्मत् पितरं शर्माणं गोत्रं वस्वंतर्गतमुख्यप्राणांतर्गत प्रद्युम्नं स्वधानमस्तर्पयामि ३

,, पितामहं ,, ,, रुद्रांतर्गतमु०सङ्कर्षणं स्वधा० ३

,, प्रपितामहं ,, ,, आदित्यांतर्गतमु०वासुदेवंस्वधा० ३

,, मातरं दां गोत्रां वस्वंतर्गतमु० प्रद्युम्नं स्वधा० ३

,, पितामहीं ,, ,, रुद्रांतर्गतमु० सङ्कर्षणं स्वधा० ३

,, प्रपितामहीं ,, ,, आदित्यांतर्गतमु० वासुदेवंस्वधा० ३

,, सापत्नजननीं ,, वस्वंतर्गतमु० प्रद्युम्नंस्वधा० ३

,, मातामहं शर्माणं गोत्रं ,, ,, ३

,, मातुःपितामहं ,, ,, रुद्रांत० मु० सङ्कर्षणं ,, ३

,, मातुःप्रपितामहं ,, आदित्यां० मु० वासुदेवं ,, ३

,, मातामहीं दां गोत्रां वस्वंत० मु० प्रद्युम्नं ,, १

,, मातुःपितामहीं ,, ,, रुद्रांतमु० सङ्कर्षणं ,, १

,, मातुःप्रपितामहीं आदित्यां० मु० वासुदेवं ,, १

आतम पत्नीं ,, ,, वस्वंत०मु० प्रद्युम्नं ,, २

अस्मत् सुतं (सपत्नीकं) शर्माणं गौत्रं ,, ,, ,, १

अस्मत् भ्रातरं (सपत्नीकं) शर्माणं गोत्रं .. .. .. १
.. पितृव्यं .. .. .. .. १
.. मातुलं .. .. .. .. १
.. दुहितरं सभर्तृकां ससुतां दां गोत्रां .. १
.. भगिनीं .. .. .. .. १
.. पितुःस्वसारं .. .. .. १
.. मातुःस्वसारं .. .. .. १
.. श्वशुरं (सपत्नीकं) शर्माणं गोत्रं .. .. १
.. गुरुं ,, ,, ,, .. .. २
.. आचार्यं .. .. .. २

॥ ततो यमतर्पणं ॥ यमं तर्पयामि । धर्मराजं त० । मृत्युं त० । अंतकं त० । वैवस्वतं त० । कालं त० । सर्व-भूतक्षयं त० । औदुंबरं त० । दध्नं त० । नीलं त० । पर-मेष्ठिनं त० । वृकोदरं त० । चित्रं त० । चित्रगुप्तं त० ॥
यमो निहंता पितृधर्मराजो वैवस्वतो दंडधरश्च कालः ।
भूताधिपो दत्तकृतानुसारी कृतांत एतद्दशभिर्जपंति ॥
इति सर्वे तिष्ठंतो दशवारं जपेयुः ॥

ॐ आग्नाअंग्नइहावसेहोत्रांयविष्ठभारतीं । वरूत्रींधिषणांवह ॥१
अधीवासंपरिंमातूरिहन्नहंतुविग्रेभिः सत्वभिर्यातिविज्रयः ।
वयोदधत्पद्वतेरेरिंहत्सदानुश्येनींसचतेवर्तनीरह ॥२॥
अयंयज्ञोदेवयाअयंमियेधइमाब्रह्माण्ययमिंद्रसोमः ।
स्तीर्णंबर्हिरातुशक्रप्रयाहिपिबानिषद्यविमुचाहरींइह ॥ ३ ॥

अतीयामनिदस्तिरःस्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्टीशंयोरापउस्रिभेषजंस्याममरुतःसह ॥ ४ ॥
अग्नेरक्षाणोअंहसःप्रतिष्मदेवरीषतः । तपिष्ठैरजरोदह ॥५॥
अग्नेभवसुषमिधासमिद्ध उतबर्हिरुर्वियाविस्तृणीतां ।
उतद्वारउशतीर्विश्रयंतामतदेवाँ उशतआवहेह ॥ ६ ॥
अद्यामुरीययदियातुधानोअस्मियदिवायुस्ततपपूरुषस्य ।
अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ॥ ७ ॥
अध्वर्योद्रावयात्वंसोममिंद्रःपिपासति ।
उपनूनंयुयुजेवृषणाहरीआचजगामवृत्रहा ॥ ८ ॥
अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे । देवाँआसादयादिह ॥९॥
अग्नेबाधस्वविमृधोविदुर्गहापामीवामपरक्षांसिसेध ।
अस्मात्समुद्राद्बृहतोदिवोनोपांभूमानमुपनःसृजेह ॥१०॥

ततः शांत्यर्थं आनोभद्राः शंनइंद्राग्नी इत्यादिशांतिसूक्तानि सुवृष्टयर्थं पर्जन्यसूक्तानि च जपेत् ।

ॐ विश्वेत्तातेसवनेषुप्रवाच्या याचकर्थमघवन्निंद्रसुन्वते ।
पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबन्धवे ॥

इति मंत्रेण ऋषीन् जले उद्वासयेत् । वेदप्रीत्यर्थं ब्राह्मणान् भोजयेत् । गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥
इत्यग्निं विसृज्य द्विराचामेत् ॥ इत्युत्सर्जनप्रयोगः ॥

## ॥ अथ उपाकर्मप्रयोगः ॥

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य । ममाध्याध्यानां चाधीतानां अध्येष्यमाणानां छंदसां सवीर्यत्वाय श्री विष्णुप्रीत्यर्थं एभिर्ब्राह्मणैःसह उपाकर्माख्यं कर्म करिष्ये ॥

तदंगं गणपतिपूजनं स्थण्डिलादि सकलं कर्म करिष्ये । गणपतिं पूजयित्वा स्मृत्वा वा । स्थण्डिलोपलेपनं स्थण्डिले लक्ष्मीध्यानं अग्नेः षोडशसंस्कारार्थं वैष्णवत्वसिध्यर्थं होमं ध्यानांतं कृत्वा । क्रियमाणे उपाकर्महोमे देवता परिग्रहार्थं मन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा । अत्र प्रधानं–सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छदांस्यृषीन् एताः–प्रधानदेवताः आज्येन । पुनरत्र प्रधानं- अग्निं अप्तृणसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निंइंद्रासोमौ इंद्रंअग्नामरुतः पवमान सोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येण शेषेणाग्निं स्विष्टकृतं इध्मसंन्नहनेन रुद्रं यज्ञोपवीतेन परमात्मानं अयासमग्निं देवान्विष्णुमग्निदेवान्सद्योयक्ष्ये पात्रासादने दधिसक्तुस्थालीप्रोक्षिण्यौ इत्यादि । दधिसक्तुना सहाज्यं त्रिःपर्यग्नि कृत्वा । चक्षुष्यंते अन्वाधानोक्तसा–वित्र्यादि नवभिर्मंत्रैः आज्यं हुत्वा अत्र पंचावत्तिनस्तिष्ठंतः

ॐ प्रसूतोभक्षमकरं चरावापिस्तोमंचेमंप्रथमः सूरिरुन्मृजे ।
सुतेसातेनयद्यागमंवांप्रतिंविश्वामित्रजमदग्नीदमें ॥

इति पठित्वोपविश्य एकमवदानमधिकं गृह्यतामित्याचार्यं प्रार्थयेत् । मध्यात्पूर्वार्धात्पश्चार्धाच्च त्रिर्हविषोऽवदायाभिघार्य जुहुयात् ॥ अग्निमीळे वैश्वामित्रो-मधुच्छंदाग्निर्गायत्री उपाकर्मप्रधान दधिसक्तुहोमे वि० ॥

ॐ अग्निमीळेपुरोहितं यज्ञस्यदेवमृत्विजं । होतारं रत्नधातमंस्वाहा ॥

अग्नय इदं न मम ॥ १ ॥ कुषुंभकस्तदगस्त्योप्तृणसुर्या-अनुष्टुप् उपाकर्मप्रधान दधिसक्तुहोमे वि० ॥

ॐ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ।
वृश्चिकस्यारसं विषमरसं वृश्चिकते विषंस्वाहा ॥

अप्तृणसुर्येभ्य इदं न मम ॥ २ ॥ त्वमग्ने शौनको-गृत्समदोग्निर्जगती उपाकर्म प्रधान दधिसक्तुहोमे वि० ॥

ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणि स्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणां नृपते जायसे शुचिःस्वाहा ॥

अग्नय इदं न मम ॥ ३ ॥ आवदन्गृत्समदः शकुन्तो जगती उपाकर्मप्रधान दधिसक्तुहोमे वि० ॥

ॐ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ।
यदुत्पतन्वदसिकर्करिर्यथा बृहद्वदेमविदथे सुवीराःस्वाहा ॥

शकुंतायेदं न मम ॥ ४ ॥ सोमस्यमा गाथिनो-

विश्वामित्रोऽग्निस्त्रिष्टुप् उपाकर्मप्रधानदधिसक्तुहोमे वि०।।
ॐ सोमस्यमातवसंवक्ष्यग्ने वह्निंचकर्थविदथेयजध्यै ।
देवाँ अच्छादीद्यद्युंजे आद्रिं शमाये अग्ने तन्वं जुषस्वस्वाहा ।।
अग्नय इदं न मम ।। ५ ।। गृणाना भार्गवो जमदग्निर्मि
त्रावरुणौ गायत्री उपाकर्मप्रधानदधिसक्तुहोमे वि० ।।
ॐ गृणानाजमदग्निनायोनावृतस्यसीदतम् ।
पातंसोममृतावृधास्वाहा ।। मित्रावरुणाभ्यामिदं न मम ।।६।।
त्वांह्यग्नेगौतमो वामदेवोग्निरष्टी उपाकर्मप्रधानदधिस० ।
ॐ त्वांह्यग्नेसदमित्समन्यवो देवासो देवमरतिन्न्येरिरइतिक्रत्वा-
न्येरिरे । अमर्त्यंयजतमर्त्येष्वा देवमादेवं जनतप्रचेतसं विश्वमा-
देवं जनतप्रचेतसंस्वाहा ।। अग्नय इदं न मम ।। ७ ।। धामंते-
गौतमोवामदेव आपो जगती उपाकर्मप्रधानदधिसक्तु वि०
ॐ धामंते विश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्य १ न्तरायुषि ।
अपामनीकेसमिथेय आभृतस्तमश्यामममधुमंतंतऊर्मिंस्वाहा ।।
अद्भ्य इदं न मम ।। ८ ।। अबोध्यात्रेयो बुधगविष्ठिराव
ग्निस्त्रिटूप् उपाकर्मप्रधान दधिसक्तुहोमे वि० ।।
ॐ अबोध्यग्निःसमिधाजनानां प्रतिधेनुमिवायती मुषासं ।
यह्वाइवप्रवयामुज्जिहानाः प्रभानवः सिस्रतेनाकमच्छस्वाहा ।।
अग्नय इदं न मम ।। ९ ।। गन्तान आत्रेय एवया मरुन्मरु
तोतिजगती उपाकर्मप्रधानदधिसक्तुहोमे वि० ।।

ॐ गंतानोयज्ञंयज्ञियासुशमिश्रोताहवंमरुक्षएवयामरुत्व् ।
ज्येष्ठासोनपर्वतासोव्योमानियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदः ॥

मरुद्भ्य इदं न मम ॥१०॥ त्वंह्यग्नेबार्हस्पत्योभारद्वाजोऽग्निस्त्रिष्टुप् उपाकर्मप्रधान दधिसक्तुहोमे वि० ॥

ॐ त्वंह्यग्नेप्रथमोमनोता स्याधियो अभवोदस्महोता ।
त्वंसींवृषन्नकृणोर्दुष्टरींतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥

अग्नय इदं न मम ॥ ११ ॥ योनःस्वःपायुर्भारद्वाजो विश्वेदेवा अनुष्टुप् उपाकर्मप्रधानदधिसक्तुहोमे वि० ॥

ॐ योनःस्वो अरणोयश्चनिष्ट्योजिघांसति ।
देवास्तंसर्वे धूर्वंतु ब्रह्मवर्ममामांतरंस्वाहा ॥

विश्वेभ्यो देवेभ्य इदं न मम ॥ १२ ॥ अग्निनरो- मैत्रावरुणिर्वसिष्ठोग्निर्विराट् उपाकर्मप्रधानदधिसक्तुहो० ॥

ॐ अग्निंनारेदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तम् ।
दूरेदृशंगृहपतिमथर्युंस्वाहा ॥ अग्नय इदं न मम ॥ १३ ॥

प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठ इंद्रसोमावनुष्टुप्उ०दधि वि० ॥

ॐ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतम् ।
रक्षोभ्योवधमस्यतमशनिं यातुमद्भ्यःस्वाहा ॥

इंद्रासोमाभ्यामिदं न मम ॥ १४ ॥ माचित्काण्वःप्रगाथ इंद्रोबृहती उपाकर्मप्रधान दधिसक्तुहोमे विनियोगः ॥

ॐ माचिदन्यद्विशंसतसखायोमारिषण्यत ।
इंद्रमित्स्तोतावृषणंसचासुते मुहुरुक्थाच शंसतस्वाहा ॥

इन्द्रायेदं न मम ॥ १५ ॥ आग्नेयाहिकाण्वःसौभरिरग्नामरुतोनुष्टुप् उपाकर्मप्रधान दधिसक्तु होमे विनियोगः॥

ॐ अग्नेयाहि मरुत्सखा रुद्रेभिः सोमपीतये ।
सोभर्या उपसुष्टुतिं मादयस्वस्वर्णरे स्वाहा ॥

अग्नामरुद्भ्य इदं न मम ॥ १६ ॥ स्वादिष्ठयामधुच्छंदाः पवमानःसोमो गायत्री उपाकर्मप्रधानदधिसक्तुहोमेवि० ॥

ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया। इंद्रायपातवेसुतः स्वाहा।

पवमानाय सोमायेदं न मम ॥ १७ ॥ यत्तेराजान्मारीचः कश्यपःपवमानःसोमःपंक्तिःउपाकर्मप्रधानदधिसक्तुहोमेवि०

ॐ यत्तेराजञ्छृतंहविस्तेनसोमाभिरक्षनः ।
अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदोपरिस्रवस्वाहा॥

पवमानाय सोमायेदं ॥ १८ ॥ अग्नेबृहन्नाप्त्यस्त्रितोग्निस्त्रिष्टुप् उपाकर्मप्रधान दधिसक्तु होमे विनियोगः ॥

ॐ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात् ।
अग्निर्भानुनारुशंतास्वंग आजातेविश्वासद्मान्यप्राःस्वाहा ॥

अग्नय इदं न मम ॥१९॥ समानीवःसंवननःसंज्ञानमनुष्टुप् उपाकर्मप्रधानदधिसक्तु होमे विनियोगः ॥

ॐ समानीव आकूतिः समानाहृदयानि वः ।
समानमस्तुवोमनो यथावः सुसहासतिस्वाहा ॥
संज्ञानायेदं न मम ॥ २० ॥ ततः स्विष्टकृतं हुत्वा रज्जुं प्रहृत्य दधिसक्तुप्राश्नीयुः ॥ दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप् दधिसक्तुप्राशने विनियोगः ॥

ॐ दधिक्राव्णो अकारिषंजिष्णोरश्वस्यवाजिनः ।
सुरभिनोमुखाकरत्प्रण आयूँषितारिषत्स्वाहा ॥
प्राश्य आचम्य मार्जयेत् । उत्तरपरिस्तरणामधः अञ्जलिंकृत्वा अन्येन अप आसेचयने तन्मार्जनम् ॥

यज्ञोपवीतमिति मंत्रस्य परब्रह्म परमात्मा त्रिष्टुप् यज्ञोपवीतहवने विनियोगः ॥

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्रयं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः-
स्वाहा ॥ परमात्मन इदं न मम ॥

ततःसदक्षिणानि यज्ञोपवीतानि यथाशक्ति ब्राह्मणेभ्यो दत्वा स्वयं धारयेत् । अन्ये सर्वेऽपि स्वस्वधार्यं यज्ञोपवीतानी पृथगभिमंत्र्य धारयेयुः ॥

## ॥ यज्ञोपवीताभिमंत्रणम् ॥

उपाकर्मांगत्वेन यज्ञोपवीताभिमंत्रणं धारणं च करिष्ये। ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मात्रिष्टुप् । सूत्रकरणे वि०॥

ॐ ब्रह्मजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ।
सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥
इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्री सूत्रत्रिगुणीकरणेवि।
ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधे पदं । समूढमस्यपांसुरे ॥
त्र्यंबकंमैत्रावरुणिर्वसिष्ठो रुद्रोनुष्टुप् । ग्रंथिबंधने वि० ॥
ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं ।
उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीयमामृतात् ॥
आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्रीअभि०।आ-
हिरण्यवर्णाःशुचयःपावका यासुजातःकश्यपो यास्विंद्रः ।
अग्निंयागर्भंदधिरेविरूपास्तान आपःशंस्योनाभवंतु ॥
यासांराजावरुणो यातिमध्ये सत्यानृते अवपश्यंजनानां।
मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥
यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ।
याःपृथिवींपयसोदंतिशुक्रास्तानआपःशंस्योनाभवंतु ॥
शिवेनंमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ।
सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥
पवमानःसुवर्जनः । पवित्रेणाविचर्षणिः । यःपोतासपुनातुमा ।
पुनंतुमादेवजनाः । पुनंतुमनवोधिया । पुनंतुविश्वआयवः ।
जातवेदःपवित्रवत् । पवित्रेणपुनाहिमा । शुक्रेणदेवदीद्यत् ।
अग्नेक्रत्वाक्रतूंरनु । यत्तेपवित्रमर्चिषि । अग्नेवितंतमंतरा ।

ब्रह्मतेनपुनीमहे । उभाभ्यांदेवसवितः । पवित्रेणसवेनच । इदंब्रह्मपुनीमहे । वैश्वदेवीपुनतीदेव्यागात् । यस्यैबह्वीस्तनुवो - वीतपृष्ठाः । तयामदंतःसधमाद्येषु । वयꣳस्यामपतयोरयीणां । वैश्वानरोरश्मिभिर्मापुनातु । वातःप्राणेनैषिरोमयोभूः । द्यावापृथिवीपयसापयोभिः । ऋतावरीयज्ञियेमापुनीतां । बृहद्भिःसवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्नेदक्षैःपुनाहिमा । येनदेवाअपुनत । येनापोदिव्यंकशः । तेनदिव्येनब्रह्मणा । इदंब्रह्मपुनीमहे । यःपावमानीरध्येति । ऋषिभिस्संभृतꣳरसं । सर्वꣳसपूतमश्नाति । स्वदितंमातरिश्वना । पावमानीर्योअध्येति । ऋषिभिःसंभृतꣳरसं । तस्मैसरस्वतीदुहे । क्षीरꣳसर्पिर्मधूदकम् । पावमानीःस्वस्त्ययनीः । सुदुघाहिपयस्वतीः । ऋषिभिःसंभृतोरसः । ब्राह्मणेष्वमृतꣳहितं । पावमानीर्दिशंतुनः । इमंल्लोकमथोअमुं । कामान्त्समर्धयंतुनः । देवीर्देवैःसमाभृताः । पावमानीस्स्वस्त्ययनीः । सुदुघाहिघृतश्चुतः । ऋषिभिःसंभृतोरसः । ब्राह्मणेष्वमृतꣳहितं । येनदेवाःपवित्रेण । आत्मानंपुनतेसदा । तेनसहस्रधारेण । पावमान्यःपुनंतुमा । प्राजापत्यंपवित्रं । शतोद्यामꣳहिरण्मयं । तेनब्रह्मविदोवयम् । पूतंब्रह्मपुनीमहे । इंद्रःसुनीतीसहमापुनातु । सोमःस्वस्त्यावरुणःसमीच्या । यमोराजाप्रमृणाभिःपुनातुमा । जातवेदामोर्जयंत्यापुनातु ॥

ॐ भूरग्निंचपृथिवींचमांचं । त्रीँश्चलोकान्त्संवत्सरंचं ।
प्रजापतिस्त्वासादयतु । तयादेवतयाङ्गिरस्वत्ध्रुवासींद ॥
ॐ भुवोवायुंचांतरिक्षंचमांचं । त्रीँश्चलोकान्त्संवत्सरंचं ।
प्रजापतिस्त्वासादयतु । तयादेवतयाङ्गिरस्वत्ध्रुवासींद ॥
ॐ स्वरादित्यंचदिवंचमांचं । त्रीँश्चलोकान्त्संवत्सरंचं ।
प्रजापतिस्त्वासादयतु । तयादेवतयाङ्गिरस्वत्ध्रुवासींद ॥
ॐ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांचं । त्रीँश्चलोकान्त्संवत्सरंचं
प्रजापतिस्त्वासादयतु । तयादेवतयाङ्गिरस्वध्रुवासींद ॥
ॐ असुनीतेपुनरस्मासुचक्षुःपुनःप्राणामिहनोधेहिभोगं ।
ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानःस्वस्ति ॥
ॐ पुनर्नो असुंपृथिवीददातु पुनर्द्यौर्देवीपुनरंतरिक्षं ।
पुनर्नःसोमस्तन्वंददातु पुनःपूषापथ्यां१ यास्वस्ति ॥

ऋग्द्वयेनप्राणप्रतिष्ठांकृत्वा । गायत्र्याद्वादशवारमभिमंत्र्य ॥

ॐकारायनमः ॐकारंवाच्यं अनिरुद्धमावाहयामि १
अग्नये नमः अग्निं तदंतर्यामिणं भारती० प्रद्युम्नमावाह २
नागाय नमः नागं तदंतर्यामिणं भारती० सङ्कर्षणमावाह ३
सोमाय नमः सोमं तदंतर्यामि० भारती० वासुदेवमावा० ४
पितृभ्यो नमः पितॄन् तदंतर्यामिणं भारती० नारायणा० ५
प्रजापतये नमः प्रजापतिं तदंत० भारती० वासुदेवमा० ६

वायवे नमः वायुं तदंतर्यामि० भारती० सङ्कर्षणमावाह ७
सूर्याय नमः सूर्यं तदंतर्या० भारती० प्रद्युम्नमावाहया० ८
विश्वेभ्योदेवेभ्यो नमः विश्वान्देवान् तदंत०भा०अनिरुद्ध९
ऋग्वेदं प्रथमदोरकेन्यसामि। यजुर्वेदंद्वितीयदोरकेन्यसामि।
सामवेदं तृतीयदोरके न्यसामि। अथर्वणवेदं ग्रन्थौ न्यसामि। उद्यन्नद्येति तिसृभिः सूर्याय दर्शयेत्॥ ॐ

ॐ उद्यन्नद्यमित्रमह आरोहन्नुत्तरांदिवं।
हृद्रोगं मम सूर्य हरिमाणं च नाशय॥
शुकेषु मे हरिमाणं रोपणाकासु दध्मसि।
अथोहारिद्रवेषु मे हरिमाणं निदध्मसि॥
उदगादयमादित्योविश्वेन सहसा सह।
द्विषंतं मह्यं रंधयन्मोऽअहं द्विषतेरधम्॥

अर्घ्यादि मन्त्रपुष्पांते गायत्रीमन्त्रेण १०८, १० वा जप्त्वा प्रार्थयेत्॥

मम ब्राह्मण्यसिध्यर्थं वहामि त्वामतन्द्रितः।
पावित्र्यं बलमायुष्यं श्रियं कांतिमरोगताम्॥
हरि तद्भक्तसेवां च मया कारय मत्प्रिय॥

आचम्य। ॐयज्ञोपवीतंपरमंपवित्रं प्रजापतेर्यत्सहजंपुरस्तात्।
आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तुतेजः॥
इति मंत्रेण वामनं ध्यात्वा दक्षिणं बाहुमुद्धृत्य पश्चात्कण्ठेधारयेत्। आचम्य॥

उपवीतं भिन्नतंतुं जीर्णं कश्मलदूषितम् ।
विसृजामि जले ब्रह्मन् वर्चो दीर्घायुरस्तु मे ।।

समुद्रंगच्छस्वाहेति जले विसर्जयेत् ।।

ततःसर्वैःसह आचम्य प्राणानायम्य पृथ्वीतिमंत्रस्य इत्युत्सर्जनांगवत् ब्रह्मयज्ञांते सर्वे उपाकृता वै वेदाः इत्युक्त्वा अंजलिस्थान् कुशान् दक्षिणकटौ निवेशयेयुः ।। ततः आचार्यः प्रायश्चित्तादि होमशेषं समापयेत् ।। ततःसर्वे वेद-प्रीत्यर्थंब्राह्मण भोजनं सङ्कल्प्य दक्षिणां दद्युः ।। आचार्योऽग्निं विसृज्य श्रीहरिणीपतिपरशुरामःप्रीयताम् इत्युक्त्वा द्विराचामेत् ।। इत्युपाकर्मप्रयोगः ।।

## ।। नूतनब्रह्मचारिणामुपाकर्मः ।।

यजमानः– आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य ममास्य कुमारस्य नूतनब्रह्मचारिणः वेदग्रहणाधिकारार्थं उपाकर्माख्यं कर्म करिष्ये ।। तदंगभूतं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये ।। उक्तरीत्या कृत्वा । यज्ञोपवीतधारणकाले कटिसूत्रकौपीन वस्त्राजिनयज्ञोपवीत मेखला दण्डान् उपनयनवद्धारयित्वा ।। पुराणानि जले निक्षिपेत् ।।

तत्र मंत्राः– युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रा-वरुणौत्रिष्टुप् वस्त्रधा० ।।

ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ।
अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे ॥

मित्रस्यचक्षुरित्यस्यवामदेवोऽजिनंत्रिष्टुप्। अजिनधारणेवि०
ॐ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्विस्थविरंसमिद्धम् ।
अनाहस्यं वसनंजरिष्णु परीदंवाज्यजिनंदधेहम् ॥

यज्ञोपवीतमितिमंत्रस्य० यज्ञोपवी०। ॐ यज्ञोपवीतं०तेजः।
इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप् मेखलाबन्धनेवि०
ॐ इयंदुरुक्तात्परिबाधमाना शर्मवरूथं पुनतीन आगात् ।
प्राणापानाभ्यांबलमाभरंती प्रियादेवानांसुभगामेखलेयम्॥
ऋतस्यगोप्त्री तपसःपरस्पी घ्नतीरक्षः सहमाना अरातीः।
सानःसमंतमनुपरी(रे)हिभद्रया भर्तारस्तेमेखलेमारिषाम॥

मेखलां त्रिरावृत्य नाभिप्रदेशे ग्रन्थित्रयं कुर्यात् ॥
स्वस्तिन इत्यस्य स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुप्दण्डधारणे
ॐ स्वस्तिनोमिमीतामश्विनाभगस्वस्तिदेव्यदीतिरनर्वणः ।
स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥

अदांतं दमयित्वा मां मार्गे संस्थापयन् स्वयम् ।
दण्डःकरेस्थितो यस्मात्तस्माद्रक्ष यतो भयम् ॥

इति विशेषः। आचार्यं संपूज्य यथाशक्ति ब्राह्मणान् भोजयित्वा भूयसीं दक्षिणां दद्यात्। आशिषो गृण्हीयात् ॥



